.. shrii shiva puujA ..

# ॥ श्री शिव पूजा ॥

बहु धान्य नाम संवत्सरे उत्तरायणे शिशिर ऋतौ माघ मासे
कृष्ण पक्षे त्रयोदशी तिथौ उत्तराषाडा नक्षत्रे रवि वासरे

1 At the regular Altar

ॐ सर्वेभ्यो गुरुभ्यो नमः ।
ॐ सर्वेभ्यो देवेभ्यो नमः ।
ॐ सर्वेभ्यो ब्राह्मणेभ्यो नमः ॥
प्रारंभ कार्यं निर्विघ्नमस्तु । शुभं शोभनमस्तु ।
इष्ट देवता कुलदेवता सुप्रसन्ना वरदा भवतु ॥

अनुज्ञां देहि ॥

at the shiva Altar

२ आचमनः

(Sip one spoon of water after each mantra)

ॐ केशवाय स्वाहा । ॐ नारायणाय स्वाहा ।
ॐ माधवाय स्वाहा ।

(Now we chant the 21 names of the Lord, in order to concentrate on the Lord)

ॐ गोविंदाय नमः । ॐ विष्णवे नमः ।
ॐ मधुसूदनाय नमः । ॐ त्रिविक्रमाय नमः ।
ॐ वामनाय नमः । ॐ श्रीधराय नमः ।
ॐ हृषीकेशाय नमः । ॐ पद्मनाभाय नमः ।
ॐ दामोदराय नमः । ॐ सङ्कर्षणाय नमः ।
ॐ वासुदेवाय नमः । ॐ प्रद्युम्नाय नमः ।
ॐ अनिरुद्धाय नमः । ॐ पुरुषोत्तमाय नमः ।
ॐ अधोक्षजाय नमः । ॐ नारसिंहाय नमः ।
ॐ अच्युताय नमः । ॐ जनार्दनाय नमः ।
ॐ उपेंद्राय नमः । ॐ हरये नमः ।
श्री कृष्णाय नमः ॥

३ प्राणायामः

ॐ प्रणवस्य परब्रह्म ऋषिः । परमात्मा देवता ।
दैवी गायत्री छन्दः । प्राणायामे विनियोगः ॥

ॐ भूः । ॐ भुवः । ॐ स्वः । ॐ महः ।
ॐ जनः । ॐ तपः । ॐ सत्यम् ।
ॐ तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमही
धियो यो नः प्रचोदयात् ॥

पुनराचमन

(Repeat Achamana 2 - given above)
ॐ आपोज्योति रसोमृतं ब्रह्म भूर्भुवस्सुवरोम् ॥
(Apply water to eyes and understand that you are of the nature of Brahman)

४ सङ्कल्पः

ॐ श्रीमान् महागणाधिपतये नमः ।

श्री गुरुभ्यो नमः । श्री सरस्वत्यै नमः ।
श्री वेदाय नमः । श्री वेदपुरुषाय नमः ।
इष्टदेवताभ्यो नमः ।
(Prostrations to your favorite deity)
कुलदेवताभ्यो नमः ।
(Prostrations to your family deity)
स्थानदेवताभ्यो नमः ।
(Prostrations to the deity of this house)
ग्रामदेवताभ्यो नमः ।
(Prostrations to the deity of this place)
वास्तुदेवताभ्यो नमः ।
(Prostrations to the deity of all the materials we have collected)
शचीपुरंदराभ्यां नमः ।
(Prostrations to the Indra and shachii)
उमामहेश्वराभ्यां नमः ।
(Prostrations to Shiva and pArvati)
मातापितृभ्यां नमः ।
(Prostrations to our parents)
लक्ष्मीनारायणाभ्यां नमः ।
(Prostrations to the Lords who protect us - LakShmi and NArAyaNa)
सर्वेभ्यो देवेभ्यो नमो नमः ।
(Prostrations to all the Gods)
सर्वेभ्यो ब्राह्मणेभ्यो नमो नमः ।
(Prostrations to all Brahamanas - those who are in the religious path)
येतद्कर्मप्रधान देवताभ्यो नमो नमः ।
(Prostrations to Lord Shiva, the main deity if this puja)

॥ अविघ्नमस्तु ॥

सुमुखश्च एकदंतश्च कपिलो गजकर्णकः ।
लंबोदरश्च विकटो विघ्ननाशो गणाधिपः ॥
धूम्रकेतुर्गणाध्यक्षो बालचन्द्रो गजाननः ।
द्वादशैतानि नामानि यः पठेत् श्रुणुयादपि ॥
विद्यारंभे विवाहे च प्रवेशे निर्गमे तथा ।
संग्रामे सङ्कटेश्चैव विघ्नः तस्य न जायते ॥

(Whoever chants or hears these 12 names of Lord Ganesha will not have any obstacles in all their endeavours)

शुक्लांबरधरं देवं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत् सर्व विघ्नोपशांतये ॥

सर्वमङ्गल माङ्गल्ये शिवे सर्वार्थ साधिके ।
शरण्ये त्र्यंबके देवी नारायणी नमोऽस्तुते ॥

(We completely surrender ourselves to that Goddess who embodies auspiciousness, who is full of auspiciousness and who brings auspicousness to us)

सर्वदा सर्व कार्येषु नास्ति तेषां अमङ्गलम् ।
येषां हृदिस्थो भगवान् मङ्गलायतनो हरिः ॥

(When Lord Hari, who brings auspiciousness is situated in our hearts, then there will be no more inauspiciousness in any of our undertakings)

तदेव लग्नं सुदिनं तदेव ताराबलं चंद्रबलं तदेव ।
विद्या बलं दैवबलं तदेव लक्ष्मीपतेः तेंघ्रिऽयुगं स्मरामि ॥

(What is the best time to worship the Lord? When our hearts are at the feet of Lord Narayana, then the strength of the stars, the moon, the strength of knowledge and all the Gods will combine and make it the most auspicious time and day to worship the Lord)

लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः ।
येषां इन्दीवर श्यामो हृदयस्थो जनार्दनः ॥

(When the Lord is situated in a person's heart, he will always have profit in his work and victory in all that he takes up and there is no question of defeat for such a person)

विनायकं गुरुं भानुं ब्रह्माविष्णुमहेश्वरान् ।
सरस्वतीं प्रणम्यादौ सर्व कार्यार्थ सिद्धये ॥

(To achieve success in our work and to find fulfillment we should first offer our prayers to Lord Vinayaka and then to our teacher, then to the Sun God and to the holy trinity of Brahma, ViShNu and Shiva)

श्रीमद् भगवतो महापुरुषस्य विष्णोराज्ञाय प्रवर्तमानस्य
अद्य ब्रह्मणोऽद्वितीय परार्धे विष्णुपदे श्री श्वेतवराह कल्पे
वैवस्वत मन्वन्तरे भारत वर्षे भरत खंडे जंबूद्वीपे
दण्डकारण्य देशे गोदावर्या दक्षिणे तीरे कृष्णवेण्यो उत्तरे
तीरे परशुराम क्षत्रे (सम्युक्त अमेरिका देशे St Lewis ग्रामे
or Australia देशे Victoria ग्रामे बह्हीनु देशे)
शालिवाहन शके वर्तमाने व्यवहारिके बहु धान्य नाम संवत्सरे
उत्तरायणे शिशिर ऋतौ माघ मासे कृश्ण पक्षे त्रयोदसि तिथौ
उत्तराशाड नक्षत्रे रवि वासरे सर्व ग्रहेषु यथा राशि स्थान
स्थितेषु सत्सु येवं गुणविशेषेण विशिष्टायां शुभपुण्यतिथौ मम
आत्मन श्रुतिस्मृतिपुराणोक्त फलप्राप्यर्थं मम सकुटुम्बस्य क्षेम स्थैर्य
आयुरारोग्य चतुर्विध पुरुषार्त्थ सिध्यर्थं अंगीकृत श्री शिवरात्रि
व्रतांगत्वेन संपादित सामग्रय्य श्रीगणेश वरुण इंद्रादि
अष्टलोकपाल गणपति चतुष्ट देवता पूजनपूर्वकं श्री शिव
प्रीत्यर्थं यथा शक्त्या यथा मिलितोपचार द्रव्यैः पुरुषसूक्त
पुराणोक्त मन्त्रैश्च ध्यानावाहनादि षोडशोपचारे श्री शिव
पूजनं करिष्ये ॥

इदं फलं मयादेव स्थापितं पुरतस्तव ।
तेन मे सफलावाप्तिर् भवेत् जन्मनि जन्मनि ॥
(keep fruits in front of the Lord)

---

५ शिव पञ्चाक्षरी न्यास
(touching various parts of the body)

॥ ॐ ॥
अस्य श्री शिव पञ्चाक्षरी मन्त्रस्य वामदेव ऋषिः ।
अनुष्टुप् छन्दः । श्री सदाशिवो देवता ।
श्री सदाशिव प्रीत्यर्थे न्यासे पूजने च विनियोगः ॥

वामदेव ऋषये नमः । शिरसे स्वाहा ॥
(touch the head)
अनुष्टुप् छन्दसे नमः । मुखे स्वाहा ॥
(touch face)
श्री सदाशिव देवतायै नमः । ललाटे स्वाहा ॥

(touch the forehead)
ॐ नं तत्पुरुषाय नमः । हृदये स्वाहा ॥
( touch the heart)
ॐ मं अघोराय नमः । पादयो स्वाहा ॥
(touch feet)
ॐ शिं सद्योजाताय नमः । गुह्ये स्वाहा ॥
(touch groin)
ॐ वं वामदेवाय नमः । मूर्ध्नि स्वाहा ॥
(touch top of the skull )
ॐ यं ईशानाय नमः । श्रोत्रे स्वाहा ॥
(touch ears)

ॐ ॐ हृदयाय नमः ।
ॐ नं शिरसे स्वाहा ।
ॐ मं शिखायै वौषट् ।
ॐ शिं कवचाय हुं ।
ॐ वं नेत्रत्रयाय वौषट् ।
ॐ यं अस्त्राय फट् ।

---

६ दिग्बन्धन
( show mudras)

ॐ अघोरष्ट्रेन इति दिग्बन्धः । दिशो बद्नामि ॥

---

७ गणपति पूजा

आदौ निर्विघ्नतासिध्यर्थं महा गणपतिं पूजनं करिष्ये ।
ॐ गणानां त्वा शौनको गृत्समदो गणपतिर्जगति
गणपत्यावाहने विनियोगः ॥
(pour water)

ॐ गणानां त्वा गणपतिं आवामहे ।
कविं कविनामुपम श्रवस्तमम् ।
ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत ।
आनः शृण्वन्नूतिभिः सीदसादनम् ॥

भूः गणपतिं आवाहयामि ।
भुवः गणपतिं आवाहयामि ।
स्वः गणपतिं आवाहयामि ।
ॐ भूर्भुवस्वः महागणपतये नमः ।
ध्यायामि । ध्यानं समर्पयामि ।

ॐ महागणपतये नमः । आवाहनं समर्पयामि ।
ॐ महागणपतये नमः । आसनं समर्पयामि ।
ॐ महागणपतये नमः । पाद्यं समर्पयामि ।
ॐ महागणपतये नमः । अर्घ्यं समर्पयामि ।
ॐ महागणपतये नमः । आचमनीयं समर्पयामि ।
ॐ महागणपतये नमः । स्नानं समर्पयामि ।
ॐ महागणपतये नमः । वस्त्रं समर्पयामि ।
ॐ महागणपतये नमः । यज्ञोपवीतं समर्पयामि ।
ॐ महागणपतये नमः । चंदनं समर्पयामि ।
ॐ महागणपतये नमः । परिमल द्रव्यं समर्पयामि ।
ॐ महागणपतये नमः । पुष्पाणि समर्पयामि ।
ॐ महागणपतये नमः । धूपं समर्पयामि ।
ॐ महागणपतये नमः । दीपं समर्पयामि ।
ॐ महागणपतये नमः । नैवेद्यं समर्पयामि ।
ॐ महागणपतये नमः । ताम्बूलं समर्पयामि ।
ॐ महागणपतये नमः । फलं समर्पयामि ।
ॐ महागणपतये नमः । दक्षिणां समर्पयामि ।
ॐ महागणपतये नमः । आर्तिक्यं समर्पयामि ।

ॐ भूर्भुवस्वः महागणपतये नमः ।
मन्त्रपुष्पं समर्पयामि ।
ॐ भूर्भुवस्वः महागणपतये नमः ।
प्रदक्षिणा नमस्कारान् समर्पयामि ।
ॐ भूर्भुवस्वः महागणपतये नमः ।
छत्रं समर्पयामि ।

ॐ महागणपतये नमः । चामरं समर्पयामि ।
ॐ महागणपतये नमः । गीतं समर्पयामि ।
ॐ महागणपतये नमः । नृत्यं समर्पयामि ।
ॐ महागणपतये नमः । वाद्यं समर्पयामि ।
ॐ महागणपतये नमः । सर्व राजोपचारान् समर्पयामि ॥

॥ अथ प्रार्थना ॥
ॐ वक्रतुण्ड महाकाय कोटि सूर्य समप्रभा ।
निर्विघ्नं कुरु मे देव सर्व कार्येषु सर्वदा ॥
ॐ भूर्भुवस्वः महागणपतये नमः । प्रार्थनां समर्पयामि ।

अनया पूजया विघ्नहर्ता महागणपति प्रीयताम् ॥

---

८ दीप स्थापना

अथ देवस्य वाम भागे दीप स्थापनं करिष्ये ।
अग्निनाग्नि समिध्यते कविर्ग्रहपतिर्युवा हव्यवात् जुवास्यः ॥
(light the lamps)

---

९ भूमि प्रार्थना

महिद्यौ पृथ्वीचन इमं यज्ञं मिमिक्षतां
पिप्रतान्नो भरीमभिः ॥

---

१० धान्य राशि

ॐ औषधाय संवदंते सोमेन सहराज्ञ ।
यस्मै कृणेति ब्राह्मणस्थं राजन् पारयामसि ॥
(Touch the grains/rice/wheat)

---

११ कलश स्थापना

ॐ आ कलशेषु धावति पवित्रे परिसिंच्यते
उक्तैर्यज्ञेषु वर्धते ॥
(keep kalasha on top of rice pile)
ॐ इमं मे गङ्गे यमुने सरस्वती शुतुद्रिस्तोमं सचता परुष्ण्य ।
असिक्न्य मरुद्वृधे वितस्थयार्जीकीये श्रुणुह्या सुषोमय ॥
(fill kalasha with water)
ॐ गंधद्वारां धुरादर्शां नित्य पुष्टां करीषिणीम् ।
ईश्वरीं सर्व भूतानां तामि ह्योपह्वयेश्रियम् ॥
(sprinkle in/apply ga.ndha to kalasha)
ॐ या फलिनीर्या अफला अपुष्पायाश्च पुष्पाणि ।
बृहस्पति प्रसोतास्थानो मञ्चत्वं हसः ॥
(put beetle nut in kalasha)
ॐ सहिरत्नानि दाशुषेसुवाति सविता भगः ।
तंभागं चित्रमीमहे ॥
(put jewels / washed coin in kalasha)
ॐ हिरण्यरूपः हिरण्य सन्द्रिग्पान्न पात्स्येदु हिरण्य वर्णः ।
हिरण्ययात् परियोनेर् निषद्या हिरण्यदा ददत्यन् नमस्मै ॥
(put gold / dakShina in kalasha)
ॐ काण्डात् काण्डात् परोहंति परुषः परुषः परि एवानो दूर्वे
प्रतनु सहस्रेण शतेन च ॥
(put duurva / karika )
ॐ अश्वत्थेवो निशदनं पर्णेवो वसतिश्कृत ।
गो भाज इत्किला सथयत्स नवथ पूरुषम् ॥
(put five leaves in kalasha)
ॐ या फलिनीर्या अफला अपुष्पायाश्च पुष्पाणि ।
बृहस्पति प्रसोतास्थानो मञ्चत्वं हसः ॥
(place coconut on kalasha)
ॐ युवासुवासः परीवीतागात् स उश्रेयान् भवति जायमानः ।
तं धीरासः कावयः उन्नयंति स्वाद्ध्यो स्वाद्ध्यो मनसा देवयंतः॥
(tie cloth for kalasha)
ॐ पूर्णादर्वि परापत सुपूर्णा पुनरापठ ।
वस्नेव विक्रीणावः इषमूर्जं शतकृतो ॥
(copper plate and aShTadala with ku.nkuM)

इति कलशं प्रतिष्ठापयामि ॥
सकल पूजार्थे अक्षतान् समर्पयामि ॥

---

१२ कलश पूजन

(continue with second kalasha)

कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः ।
मूले तत्र स्थितो ब्रह्म मध्ये मातृगणाः स्मृताः ॥
कुक्षौतु सागराः सर्वे सप्त द्वीपा वसुंधराः ।
ऋग्वेदोथ यजुर्वेदः सामवेदोह्यथर्वणः ॥
अंगैश्च सहिताः सर्वे कलशंतु समाश्रिताः ।
अत्र गायत्री सावित्री शांति पुष्टिकरी तथा ॥

आयान्तु देव पूजार्थं अभिषेकार्थ सिद्धये ॥

ॐ सितासिते सरिते यत्र संगधे तत्राप्लुता सोदिवमुत्पतंति ।
ये वैतन्वं विस्रजन्ति धीरास्ते जनासो अमृतत्त्वं भजन्ति ॥

॥ कलशः प्रार्थनाः ॥

कलशः कीर्तिमायुष्यं प्रज्ञां मेधां श्रियं बलम् ।
योग्यतां पापहानिं च पुण्यं वृद्धिं च साधयेत् ॥
सर्व तीर्थमयो यस्मात् सर्व देवमयो यतः ।
अथः हरिप्रियोसि त्वं पूर्णकुंभं नमोऽस्तुते ॥

कलशदेवताभ्यो नमः ।
सकल पूजार्थे अक्षतान् समर्पयामि ॥

॥ मुद्रा ॥
(Show mudras as you chant )

निर्वीषि करणार्थे तार्क्ष मुद्रा ।
अमृति करणार्थे धेनु मुद्रा ।
पवित्री करणार्थे शङ्ख मुद्रा ।
संरक्षणार्थे चक्र मुद्रा ।
विपुलमाया करणार्थे मेरु मुद्रा ।

---

१३ शङ्ख पूजन
(pour water from kalasha to sha.nkha
add ga.ndha flower)

शङ्खं चंद्रार्क दैवतं मध्ये वरुण देवताम् ।
पृष्ठे प्रजापतिं विंद्याद् अग्रे गंगा सरस्वतीम् ॥
त्वं पुरा सागरोत्पन्नो विष्णुना विधृतः करे ।
नमितः सर्व देवैश्च पाञ्चजन्यं नमोऽस्तुते ॥

पाञ्चजन्याय विद्महे । पावमानाय धीमहि ।
तन्नो शङ्खः प्रचोदयात् ॥

शङ्ख देवताभ्यो नमः ।

सकल पूजार्थे अक्षतान् समर्पयामि॥

---

१४ घंटार्चना
(Pour drops of water from sha.nkha on top of the bell apply ga.ndha flower)

आगमार्थन्तु देवानां गमनार्थन्तु राक्षसाम् ।
कुरु घंटारवं तत्र देवतावाहन लांछनम् ॥
ज्ञानथोऽज्ञानतोवापि कांस्य घंटान् नवादयेत् ।
राक्षसानां पिशाचानां तद्देशे वसतिर्भवेत् ।
तस्मात् सर्व प्रयत्नेन घंटानादं प्रकारयेत् ।

घंटा देवताभ्यो नमः ।
सकल पूजार्थे अक्षतान् समर्पयामि ॥

(Ring the gha.nTaa)

---

१५ आत्मशुद्धि
( Sprinkle water from sha.nkha on puja items and devotees)

अपवित्रो पवित्रो वा सर्व अवस्थांगतोपि वा ।
यः स्मरेत् पुण्डरीकाक्षं सः बाह्याभ्यंतरः शुचिः ॥

---

१६ गोशृन्ग पूजा

वायव्ये अर्घ्यम् । नैऋत्ये पाद्यम् ।
ईशान्ये आचमनीयम् । आग्नेये मधुपर्कम् ।
पूर्वे स्नानीयम् । पश्चिमे पुनराचमनम् ।

---

१७ पञ्चामृत पूजा
( put tulasi leaves or axataas in vessels )

क्षीरे सोमाय नमः । (keep milk in the centre)
दधिनि वायवे नमः । (curd facing east )
घृते रवये नमः । (Ghee to the south)
मधुनि सवित्रे नमः । ( Honey to west )
शर्करायां विश्वेभ्यो देवेभ्यो नमः । ( Sugar to north)

---

१८ द्वारपालक पूजा

पूर्वद्वारे द्वारश्रियै नमः ।
असितांग भैरवाय नमः । रुरु भैरवाय नमः ।
दक्षिणद्वारे द्वारश्रियै नमः ।
चण्ड भैरवाय नमः । क्रोध भैरवाय नमः ।
पश्चिमद्वारे द्वारश्रियै नमः ।
उन्मत्तभैरवाय नमः । कपाल भैरवाय नमः ।
उत्तरद्वारे द्वारश्रियै नमः ।
भीषणभैरवाय नमः । संहार भैरवाय नमः ।

ब्रह्मणे नमः । विष्णवे नमः ।
गङ्गायै नमः । गणपतये नमः ।
षण्मुखाय नमः । भृङ्गिनाथाय नमः ।
क्षेत्रपालाय नमः । त्रिपुरसंहर्त्रे नमः ।
शान्तिये नमः । तुष्टिये नमः ।
ज्ञानाय नमः । धर्माय नमः ।
वैराग्याय नमः । वीर्याय नमः ।
सत्याय नमः । अज्ञानाय नमः ।
अधर्माय नमः । अनैश्वर्याय नमः ।
असत्याय नमः । अविराज्ञाय नमः ।
सत्त्वाय नमः । रजसे नमः ।
तमसे नमः । मायाय नमः ।
पद्माय नमः ॥

द्वारपालक पूजां समर्पयामि ॥

---

१९ पीठ पूजा

आधार शक्त्यै नमः ॥ मूलप्रकृते नमः ॥
वराहाय नमः ॥ अनन्ताय नमः ॥
पद्माय नमः ॥ नालाय नमः ॥
कन्दाय नमः ॥ कर्णिकाय नमः ॥
पत्रेभ्यो नमः ॥ दलेभ्यो नमः ॥
केसरेभ्यो नमः ॥

मध्ये श्री भवानि शंकराय नमः। पीठ पूजां समर्पयामि ॥

---

२० ध्यानं

ॐ ॐ (repeat 15 times)

ध्यायेत् नित्यं महेशं रजतगिरि निभिं चारु चन्द्रावतंसम् ।
रत्नाकल्पोज् ज्वलांगं परशुमृगवरा भीति हस्तं प्रसन्नम् ॥
पद्मासीनं समन्तात् स्तुतममरगण्येः व्याघ्रकृतिं वसानम् ।
विश्वाद्यं विश्ववन्द्यं निखिल भय हरं पंच वक्त्रं त्रिनेत्रम् ॥

श्री साम्बसदाशिवाय नमः ।
श्री सदाशिवं ध्यायामि ॥

(you can add more related shlokas)

---

२१ आवाहन

( hold flowers in hand)

व्याघ्र चर्मधरं देवं चिति भस्मनुलेपनम् ।
अह्वायां उमाकान्तं नागाभरण भूषितम् ॥

ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिं विश्वतो वृत्वा अत्यतिष्ठद्दशाङ्गुलम् ॥

आगच्छ देवदेवेश तेजोराशे जगत्पते ।
क्रियमाणां मया पूजां गृहाण सुरसत्तमे ॥

ॐ भूः पुरुषं साम्बसदाशिवं आवाहयामि ।
ॐ भुवः पुरुषं साम्बसदाशिवं आवाहयामि ।
ॐ स्वः पुरुषं साम्बसदाशिवं आवाहयामि ।
ॐ भूर्भुवः स्वः साम्बसदाशिवं आवाहयामि ॥
(offer flowers to Lord)

ॐ उमाकान्ताय नमः ।आवाहयामि ॥

आवाहितो भव ।स्थापितो भव ।सन्निहितो भव ।
सन्निरुद्धो भव ।अवकुण्ठितो भव ।सुप्रीतो भव ।
सुप्रसन्नो भव ।सुमुखो भव ।वरदो भव ।
प्रसीद प्रसीद ॥
(show mudras to Lord)

स्वामिन् सर्व जगन्नाथ यावत् पूजावसानकं ।
तावत्त्वं प्रीति भावेन लिंगेस्मिन् सन्निधो भव ॥

---

२२ आसनं

पुरुष एवेदगुं सर्वम् यद्भूतं यच्छ भव्यम् ।
उतामृतत्वस्येशानः यदन्नेनातिरोहति ॥

दिव्य सिंहास नासीनं त्रिनेत्रं वृषवाहनं ।
इन्द्रादि देवनमितं ददाम्यासन मुत्तमं ॥

ॐ गौरि भर्त्रे नमः ।आसनं समर्पयामि ॥
(offer flowers/axathaas)

---

२३ पाद्यं
(offer water)

एतावानस्य महिमा अतो ज्यायागुंश्च पूरुषः ।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥

गङ्गादि सर्व तीर्थेभ्यो मया प्रार्थनया हृतम् ।
तोयमे तत् सुख स्पर्शं पाद्यर्थं प्रतिगृह्यताम् ॥

ॐ गङ्गाधराय नमः ।पादोयो पाद्यं समर्पयामि ॥

---

२४ अर्घ्यं
(offer water)

त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवात्पुनः ।
ततो विश्वङ्व्यक्रामत् साशनानशने अभि ॥

गन्धोदकेन पुष्पेण चन्दनेन सुगन्धिना ।
अर्घ्यं गृहाण देवेश भक्ति मे अचलां कुरु ॥

ॐ वृष वाहनाय नमः ।अर्घ्यं समर्पयामि ॥

---

२५ आचमनीयं
(offer water or akShathaa/ leave/flower)

तस्माद्विराडजायत विराजो अधि पूरुषः ।
स जातो अत्यरिच्यत पश्चाद्भूमि मथो पुरः ॥

कर्पूरोक्षीर सुरभि शीतलं विमलं जलं ।
गङ्गायास्तु समानीतं गृहाणाचमनीयकं ॥

ॐ साध्यो जाताय नमः ।आचमनीयं समर्पयामि ॥

---

२६ मधुपर्कं

नमोस्तु सर्वलोकेश उमादेहार्ध धारिणे ।
मधुपर्को मया दत्तो गृहाण जगदीश्वर ॥

ॐ परमेश्वराय नमः ।मधुपर्कं समर्पयामि ॥

---

२७ स्नानं

यत्पुरुषेण हविषा देवा यज्ञमतन्वत ।
वसन्तो अस्यासीदाज्यम् ग्रीष्म इध्मश्शरद्धविः ॥

गंगाच यमुनाश्चैव नर्मदाश्च सरस्वति ।
तापि पयोष्णि रेवच ताभ्यः स्नानार्थमाहृतम् ॥

ॐ श्री विश्वेश्वराय नमः ।मलापकर्श स्नानं समर्पयामि ॥

---

२७ १. पञ्चामृत स्नानं

२७ १.१ पयः स्नानं (milk bath)

ॐ आप्याय स्व स्वसमेतुते
विश्वतः सोमवृष्ण्यं भवावाजस्य सङ्धे ॥

पयस्नानमिदं देव त्रिलोचन वृषद्वज ।
गृहाण गौरीरमण त्वङ्क्तेन मय्यार्पितम् ॥

ॐ शम्भवे नमः ।पयः स्नानं समर्पयामि ॥
पयः स्नानानंतर शुद्धोदक स्नानं समर्पयामि ॥
सकल पूजार्थे अक्षतान् समर्पयामि ॥

---

२७ १.२ दधि स्नानं (curd bath)

ॐ दधिक्रावणो अकारिषं जिष्णोरश्वस्यवाजिनः ।
सुरभिनो मुखाकरत् प्राण आयुंषितारिषत् ॥

दध्न चैव महादेव स्वप्नं क्रीयते मया ।
गृहाण त्वं सुरादीश सुप्रसन्नो भवाव्यय ॥

ॐ वामदेवाय नमः ।दधि स्नानं समर्पयामि ॥
दधि स्नानानंतर शुद्धोदक स्नानं समर्पयामि ॥
सकल पूजार्थे अक्षतान् समर्पयामि ॥

---

२७ १.३ घृत स्नानं (ghee bath)

ॐ घृतं मिमिक्षे घृतमस्य योनिर्घृते श्रितो घृतंवस्यधाम
अनुष्ठधमावह मादयस्व स्वाहाकृतं वृषभ वक्षिहव्यम् ॥

सर्पीश च महारुद्र स्वप्नं क्रीयते दुन ।
गृहाण श्रद्धया दत्तं तव प्रीतार्थमेव च ॥

ॐ अघोराय नमः ।घृत स्नानं समर्पयामि ॥
घृत स्नानानंतर शुद्धोदक स्नानं समर्पयामि ॥
सकल पूजार्थे अक्षतान् समर्पयामि ॥

---

२७ १.४ मधु स्नानं (honey bath)

ॐ मधुवाता ऋतायथे मधुक्षरंति सिन्धवः माध्विनः संतोष्वधीः
मधुनक्ता मुथोषसो मधुमत्वार्थिवं रजः मधुद्यौ रस्तुनः पिता
मधुमान्नो वनस्पतिर्मधुमां अस्तु सूर्यः माध्वीर्गावो भवंतुनः ॥

इदं मधु मया दत्तं तव पुष्ट्यर्थमेव च ।
गृहाण देवदेवेश ततः शान्तिं प्रयश्च मे ॥

ॐ तत् पुरुषाय नमः ।मधु स्नानं समर्पयामि ॥
मधु स्नानानंतर शुद्धोदक स्नानं समर्पयामि ॥
सकल पूजार्थे अक्षतान् समर्पयामि ॥

---

२७ १.५ शर्करा स्नानं (sugar bath)

ॐ स्वादुः पवस्य दिव्याय जन्मने स्वादुदरिन्द्राय सुहवीतु नाम्ने ।
स्वादुर्मित्राय वरुणाय वायवे बृहस्पतये मधुमा अदाभ्यः ॥

सिथया देव देवेश स्नापनं क्रीयते यतः ।
ततः संतुष्टिमापन्नः प्रसन्नो वरदो भव ॥

ॐ ईशानाय नमः ।शर्करा स्नानं समर्पयामि।
शर्करा स्नानानंतर शुद्धोदक स्नानं समर्पयामि।
सकल पूजार्थे अक्षतान् समर्पयामि ॥

---

२७ २. गंधोदक स्नानं (Sandlewood water bath)

ॐ गंधद्वारां दुराधर्शां नित्य पुष्पां करीषिणीम् ।
ईश्वरीं सर्व भूतानां तामि होप व्हयेश्रियम् ॥

हर चंदन संभूतं हर प्रीतिश्च गौरवात् ।
सुरभि प्रिय परमेश गंध स्नानाय गृह्यताम् ॥

ॐ श्री नीलकण्ठाय नमः ।गंधोदक स्नानं समर्पयामि ॥
सकल पूजार्थे अक्षतान् समर्पयामि ॥

---

२७ ३. अभ्यंग स्नानं (Perfumed Oil bath)

ॐ कनिक्रदज्वनुशं प्रभ्रुवान।इयथिर्वाचमरितेव नावम् ।
सुमङ्गलश्च शकुने भवासि मात्वा काचिदभिभाविश्व्या विदत ॥

अभ्यंगार्थं महीपाल तैलं पुष्पादि संभवम् ।
सुगंध द्रव्य संमिश्रं संगृहाण जगत्पते ॥

ॐ उमापतये नमः ।अभ्यंग स्नानं समर्पयामि।
सकल पूजार्थे अक्षतान् समर्पयामि ॥

---

२७ ४. अंगोद्वर्तनकं (To clean the body)

अंगोद्वर्तनकं देव कस्तूर्यादि विमिश्रितम् ।
लेपनार्थं गृहाणेदं हरिद्रा कुङ्कुमैर्युतम् ॥

ॐ कपर्दिने नमः ।अंगोद्वर्तनं समर्पयामि ॥
सकल पूजार्थे अक्षतान् समर्पयामि ॥

---

२७ ५. उष्णोदक स्नानं (Hot water bath)

नाना तीर्थादाहृतं च तोयमुष्णं मयाकृतम् ।

स्नानार्थं च प्रयश्चामि स्वीकुरुश्व दयानिधे ॥

ॐ चन्द्रशेखराय नमः ।उष्णोदक स्नानं समर्पयामि ॥
सकल पूजार्थे अक्षतान् समर्पयामि ॥

---

२७ ६. शुद्धोदक स्नानं (Pure water bath)
sprinkle water all around

मन्दाकिन्याः समानीतं हेमाम्बोरुहावासितं ।
स्नानार्थे मय भक्त्या नीरुं स्वीकुर्यतां विभो ॥

ॐ आपोहिष्टा मयो भुवः ।तान ऊर्जे दधातन ।
महीरणाय चक्षसे ।योवः शिवतमोरसः तस्यभाजयते हनः ।
उशतीरिव मातरः ।तस्मात् अरंगमामवो ।यस्य क्षयाय जिंवध ।
आपो जन यथाचनः ॥

ॐ हराय नमः ।शुद्धोदक स्नानं समर्पयामि ॥
सकल पूजार्थे अक्षतान् समर्पयामि ॥
(after sprinkling water around throw one tulasi leaf to the north)

---

२८ महा अभिषेकः
(Sound the bell, pour water from kalasha)
पुरुष सूक्त

ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिं विश्वतो वृत्वा अत्यतिष्ठद्दशाङ्गुलम् ॥१॥

पुरुष एवेदगुं सर्वम् यद्भूतं यच्छ भव्यम् ।
उतामृतत्वस्येशानः यदन्नेनातिरोहति ॥२॥

एतावानस्य महिमा अतो ज्यायागंश्च पूरुषः ।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥३॥

त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवात्पुनः ।
ततो विश्वङ्व्यक्रामत् साशनानशने अभि ॥४॥

तस्माद्विराडजायत विराजो अधि पूरुषः ।
स जातो अत्यरिच्यत पश्चाद्भूमि मथो पुरः ॥५॥

यत्पुरुषेण हविषा देवा यज्ञमतन्वत ।
वसन्तो अस्यासीदाज्यम् ग्रीष्म इध्मश्शरद्धविः ॥६॥

सप्तास्यासन् परिधयः त्रिस्सप्त समिधः कृताः ।
देवा यद्यज्ञं तन्वानाः अबध्नन् पुरुषं पशुम् ।

तं यज्ञं बर्हिषि प्रौक्षन् पुरुषं जातमग्रतः ।
तेन देवा अयजन्त साध्या ऋषयश्च ये ॥७॥

तस्माद्यज्ञात्सर्वहुतः संभृतं पृषदाज्यम् ।
पशूगुँस्तागंश्चक्रे वायव्यान् आरण्यान् ग्राम्याश्चये ॥८॥

तस्माद्यज्ञात्सर्वहुतः ऋचः सामानि जज्ञिरे ।
छन्दाँगसि जज्ञिरे तस्मात् यजुस्तस्मादजायत ॥९॥

तस्मादश्वा अजायन्त ये के चोभयादतः ।
गावो ह जज्ञिरे तस्मात् तस्माज्जाता अजावयः ॥१०॥

यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् ।
मुखं किमस्य कौ बाहू कावूरू पादावुच्येते ॥११॥

ब्राह्मणोस्य मुखमासीत् बाहू राजन्यः कृतः ।
उरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥१२॥

चंद्रमा मनसो जातः चक्षोः सूर्यो अजायत ।
मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत ॥१३॥

नाभ्या आसीदन्तरिक्षम् शीर्ष्णो द्यौः समवर्तत ।
पदभ्यां भूमिर्दिशः श्रोत्रात् तथा लोकांग अकल्पयन् ॥१४॥

वेदाहमेतं पुरुषं महान्तम् आदित्यवर्णं तमसस्तु पारे ।
सर्वाणि रूपाणि विचित्य धीरः नामानि कृत्वाऽभिवदन् यदास्ते ॥१५॥

धाता पुरस्ताद्यमुदाजहार शक्रः प्रविद्वान् प्रदिशश्चतस्त्रः ।
तमेवं विद्वानमृत इह भवति नान्यः पन्थायनाय विद्यते ॥१६॥

यज्ञेन यज्ञमयजन्त देवाः तानि धर्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानः सचन्ते यत्र पूर्वे साध्याः सन्ति देवाः ॥१७॥

ॐ श्री रुद्राय नमः ।पुरुषसूक्त स्नानं समर्पयामि।॥

बलाय श्रियै यशसेनद्याय अमृताभिषेको अस्तु ।
शान्तिः पुष्टिः तुष्टिश्चास्तु ॥

ॐ पिनाकिने नमः ।महा अभिषेक स्नानं समर्पयामि ॥
ॐ नमः शिवाय ।स्नानानंतर आचमनीयं समर्पयामि ॥

---

२९ तर्पणं
(Offer water)

ॐ भव देवं तर्पयामि ।
ॐ शर्वं देवं तर्पयामि ।

ॐ ईशानं देवं तर्पयामि ।
ॐ पशुपतिं देवं तर्पयामि ।
ॐ उग्रं देवं तर्पयामि ।
ॐ रुद्रं देवं तर्पयामि ।
ॐ भीमं देवं तर्पयामि ।
ॐ महान्तं देवं तर्पयामि ।

---

३० प्रतिष्ठापना

ॐ नमः शिवाय ॥ (Repeat 12 times)

ॐ तदस्तु मित्रा वरुणा तदग्ने सम्योरश्मभ्यमिदमेस्तुशस्तम् ।
अशीमहि गादमुत प्रतिष्ठां नमो दिवे ब्रहते साधनाय ॥
ॐ ग्रिहावै प्रतिष्ठासूक्तं तत् प्रतिष्ठित तमया वाचा ।
शं स्तव्यं तस्माद्यद्यपिदूर इव पशून् लभते गृहानेवै ॥
नानाजिगमिशति ग्रिहाहि पशूनां प्रतिष्ठा प्रतिष्ठा

ॐ श्री साम्बसदाशिवाय सांगाय सपरिवाराय सायुधाय सशक्तिकाय नमः । श्री साम्बसदाशिवं सांगं सपरिवारं सायुधं सशक्तिकं आवाहयामि ॥
श्री गौरी सहित श्री साम्बसदाशिवाय नमः ॥
सुप्रतिष्ठमस्तु ॥

---

३१ वस्त्र
( offer two pieces of cloth for the Lord)

ॐ तं यज्ञं बर्हिषि प्रौक्षन् पुरुषं जातमग्रतः ।
तेन देवा अयजन्त साध्या ऋषयश्च ये ॥

वस्त्र सूक्ष्मं दुकूलं च देवानामपि दुर्लभं ।
गृहाणतं उमाकान्त प्रसन्नो भव सर्वदा ॥

ॐ शिवाय नमः । वस्त्रयुग्मं समर्पयामि

---

३२ श्री महा गौरी पूजा

---

३२.१ कंचुकी

नवरत्नाभिर्दधां सौवर्णैश्चैव तंतुभिः ।
निर्मितां कंचुकीं भक्त्या गृहाण परमेश्वरी ॥
ॐ श्री महा गौर्यै नमः। कंचुकीं समर्पयामि ॥

---

३२.२ कण्ठ सूत्र

मांगल्य तंतुमणिभिः मुक्तैश्चैव विराजितम् ।
सौमाङ्गल्य अभिवृध्यर्थं कण्ठसूत्रं ददामि ते ॥
ॐ श्री महा गौर्यै नमः । कण्ठसूत्रं समर्पयामि ॥

---

३२.३ ताडपत्राणि

ताडपत्राणि दिव्याणि विचित्राणि शुभानि च ।
कराभरणयुक्तानि मातस्तत्प्रतिगृह्यताम् ॥
ॐ श्री महा गौर्यै नमः ताडपत्रानि समर्पयामि ॥

---

३२.४ हरिद्रा

हरिद्रा रंजिते देवी सुख सौभाग्य दायिनी ।
हरिद्रांते प्रदास्यामि गृहाण परमेश्वरि ॥
ॐ श्री महा गौर्यै नमः । हरिद्रा समर्पयामि ॥

---

३२.५ कुङ्कुम

कुङ्कुमं कामदां दिव्यं कामिनी काम संभवम् ।
कुङ्कुमार्चिते देवि सौभाग्यार्थं प्रतिगृह्यताम् ॥
ॐ श्री महा गौर्यै नमः । कुङ्कुमं समर्पयामि ॥

---

३२.६ कज्जल

सुनील भ्रमराभसं कज्जलं नेत्र मण्डनम् ।
मयादत्तमिदं भक्त्या कज्जलं प्रतिगृह्यताम् ॥
ॐ श्री महा गौर्यै नमः । कज्जलं समर्पयामि ॥

---

३२.७ सिंदूर

विद्युत् कृशानु सङ्काशं जपा कुसुमसन्निभम् ।
सिन्दूरंते प्रदास्यामि सौभाग्यं देहि मे चिरम् ॥
ॐ श्री महा गौर्यै नमः । सिन्दूरं समर्पयामि ॥

---

३२.८ नाना आभरण

स्वभावा सुन्दरांगि त्वं नाना रत्न युतानि च ।
भूषणानि विचित्राणि प्रीत्यर्थं प्रतिगृह्यताम् ॥
ॐ श्री महा गौर्यै नमः । नाना आभरणानि समर्पयामि ॥

---

३२.९ नाना परिमल द्रव्यम्

नाना सुगन्धिकं द्रव्यं चूर्णीकृत्य प्रयत्नतः ।
ददामि ते नमस्तुभ्यं प्रीत्यर्थं प्रतिगृह्यताम् ॥
ॐ श्री महा गौर्यै नमः । नाना परिमल द्रव्यं समर्पयामि ॥

---

३३ यज्ञोपवीतम्

तस्माद्यज्ञात्सर्वहुतः संभृतं पृषदाज्यम् ।

पशूगुँस्तागुंश्चक्रे वायव्यान्  आरण्यान् ग्राम्याश्चये ॥

यज्ञोपवीतं सहजं ब्रह्मणं निर्मितं पुर ।
आयुष्यं भव वर्चस्वम् उपवीतं गृहाण मे ॥

ॐ श्री सर्वेश्वराय नमः ।यज्ञोपवीतं समर्पयामि ॥

---

३४ आभरणं

गृहाण नानाभरणानि शम्भो महेश जम्बूनाद निर्मितानि ।
ललाट कण्ठोत्तम कर्ण हस्त नितम्ब हस्तांगुलि भूषणानि ॥

ॐ शिवाय नमः ।आभरणानि समर्पयामि ॥

---

३५ गन्धम्

तस्माद्यज्ञात्सर्वहुतः ऋचः सामानि जज्ञिरे ।
छन्दाँगुसि जज्ञिरे तस्मात् यजुस्तस्मादजायत ॥

गन्धं गृहाण देवेश कस्तूरि कुङ्कुमान्वितम् ।
विलेपनार्थं कर्पूररोचन लोहितं मया ॥

ॐ श्री हराय नमः ।गन्धं समर्पयामि ॥

---

३६ नाना परिमल द्रव्यम्

ॐ अहिरैव भोग्येः पर्येति बाहुं जाया हेतिं परिभादमानः ।
हस्तज्ञो विश्वावयुनानि विद्वान्पुमास्प्रमांसं परिपातु विश्वतः ॥

ॐ श्री महेश्वराय नमः ।नाना परिमल द्रव्यं समर्पयामि ॥

---

३७ अक्षत

तस्मादश्वा अजायन्त ये के चो भयादतः ।
गावो ह जज्ञिरे तस्मात् तस्माज्जाता अजावयः ॥

अक्षतान् धवलान् शुभ्रान् कर्पूरागुरु मिश्रितान् ।
गृहाण परया भक्त्या मया तुभ्यं समर्पितान् ॥

श्री शर्वाय नमः ।अक्षतान् समर्पयामि ॥

---

३८ पुष्प

बिल्वापमार्ग धत्तूर करवीरार्क सम्भवैः ।
बकोत्फलद्रोण मुख्यैः पुष्पै पूजित शंकर ॥

ॐ श्री भवाय नमः ।पुष्पाणि समर्पयामि ॥

---

३९ अथाङ्गपूजाः

ॐ शिवाय नमः ।पादौ पूजयामि ॥
ॐ व्योमात्मने नमः ।गुल्फौ पूजयामि ॥
ॐ अनन्तैश्वर्य नाथाय नमः ।जानुनी पूजयामि ॥
ॐ प्रधानाय नमः ।जंघे पूजयामि ॥
ॐ अनन्त विराजसिंहाय नमः ।ऊरून् पूजयामि ॥

ॐ ज्ञान भूताय नमः ।गुह्यं पूजयामि ॥
ॐ सत्यसेव्याय नमः ।जघनं पूजयामि ॥
ॐ अनन्तधर्माय नमः ।कटिं पूजयामि ॥
ॐ रुद्राय नमः ।उदरं पूजयामि ॥
ॐ सत्यधराय नमः ।हृदयं पूजयामि ॥

ॐ ईशाय नमः ।पार्श्वौ पूजयामि ॥
ॐ तत्पुरुषाय नमः ।पृष्ठदेहं पूजयामि ॥
ॐ अघोरहृदयाय नमः ।स्कन्धौ पूजयामि ॥
ॐ व्योमकेशात्मरूपाय नमः ।बाह्वून् पूजयामि ॥
ॐ हराय नमः ।हस्तान् पूजयामि ॥

ॐ चतुर्भाववे नमः ।कण्ठं पूजयामि ॥
ॐ वामदेवाय नमः ।वदनं पूजयामि ॥
ॐ पिनाकहस्ताय नमः ।नासिकां पूजयामि ॥
ॐ श्रीकण्ठाय नमः ।श्रोत्रे पूजयामि ॥
ॐ इन्दुमुखाय नमः ।नेत्राणि पूजयामि ॥

ॐ हरये नमः ।भ्रवौ पूजयामि ॥
ॐ सद्योजातवेदाय नमः ।भ्रूमध्यं पूजयामि ॥
ॐ वामदेवाय नमः ।ललाटं पूजयामि ॥
ॐ सर्वात्मने नमः ।शिरः पूजयामि ॥
ॐ चन्द्रमौलये नमः ।मौलिं पूजयामि ॥

ॐ सदाशिवाय नमः ।सर्वाङ्गाणि पूजयामि ॥

---

४० अथ पुष्प पूजा

ॐ शर्वाय नमः ।करवीर पुष्पं समर्पयामि ॥
ॐ भवनाशनाय नमः ।जाजी पुष्पं समर्पयामि ॥
ॐ महादेवाय नमः ।चम्पक पुष्पं समर्पयामि ॥
ॐ उग्राय नमः ।वकुल पुष्पं समर्पयामि ॥
ॐ उग्रनाभाय नमः ।शतपत्र पुष्पं समर्पयामि ॥

ॐ भवाय नमः ।कल्हार पुष्पं समर्पयामि ॥
ॐ शशिमौलिने नमः ।सेवन्तिका पुष्पं समर्पयामि ॥

ॐ रुद्राय नमः ।मल्लिका पुष्पं समर्पयामि ॥
ॐ नीलकण्ठाय नमः ।इरुवंतिका पुष्पं समर्पयामि ॥
ॐ शिवाय नमः ।गिरिकर्णिका पुष्पं समर्पयामि ॥
ॐ भवहारिणे नमः ।आथसी पुष्पं समर्पयामि ॥

बिल्वापमार्ग धत्तूर करवीरार्क सम्भवैः ।
बकोत्फलद्रोण मुख्यैः पुष्पै पूजित शंकर ॥

भवाय नमः ।नानाविधपुष्पाणि समर्पयामि ॥

---

४१ अथ पत्र पूजा

ॐ महादेवाय नमः ।बिल्व पत्रं समर्पयामि ॥
ॐ महेश्वराय नमः ।जाजी पत्रं समर्पयामि ॥
ॐ शंकराय नमः ।चम्पका पत्रं समर्पयामि ॥
ॐ वृषभध्वजाय नमः ।तुलसी पत्रं समर्पयामि ॥
ॐ शूलपाणिने नमः ।दूर्वा युग्मं समर्पयामि ॥

ॐ कामाङ्ग नाशनाय नमः ।सेवंतिका पत्रं समर्पयामि ॥
ॐ देवदेवेशाय नमः ।मरुग पत्रं समर्पयामि ॥
ॐ श्रीकण्ठाय नमः ।दवन पत्रं समर्पयामि ॥
ॐ ईश्वराय नमः ।करवीर पत्रं समर्पयामि ॥
ॐ पार्वतीपतये नमः ।विष्णुक्रान्ति पत्रं समर्पयामि ॥
ॐ रुद्राय नमः ।माचि पत्रं समर्पयामि ॥

ॐ सदाशिवाय नमः ।सर्वपत्राणि समर्पयामि ।

---

४२ आवरण पूजा

४२.१ प्रथमावरण पूजा

देवस्य पश्चिमे सद्योजाताय नमः ।
उत्तरे वामदेवाय नमः ।
दक्षिणे अघोराय नमः ।
पूर्वे तत्पुरुषाय नमः ।
ऊर्ध्वे ईशानाय नमः ।

---

४२.२ द्वितीयावरण पूजा

आग्नेय कोणे हृदयाय नमः ।
ईशानकोणे शिरसे स्वाहा ।
नैरृत्य कोणे शिखायै वौषट् ।
वायव्य कोणे कवचाय हुं ।
अग्रे नेत्रत्रयाय वौषट् ।
दिक्षु अस्त्राय फट् ।

(right hand round the head and quickly sound a clap - thus you close all directions)

---

४२.३ तृतीयावरण पूजा

प्राच्यां अनन्ताय नमः ।
आवाच्यां सूक्ष्माय नमः ।
प्रतीच्यां शिवोत्तमाय नमः ।
उदिच्यां एकनेत्राय नमः ।
ईशान्यां एकरुद्राय नमः ।
आग्नेयां त्रै मूर्तये नमः ।
नैरृत्यां श्रीकण्ठाय नमः ।
वायव्यां शिखन्दिने नमः ।

---

४२.४ चतुर्थावरण पूजा

उत्तरे दिग्दले उमायै नमः ।
ईशान दिग्दले चण्डेश्वराय नमः ।
पूर्व दिग्दले नन्दीश्वराय नमः ।
आग्नेय दिग्दले महाकालाय नमः ।
दक्षिण दिग्दले वृषभाय नमः ।
नैरृत्य दिग्दले गणेश्वराय नमः ।
पश्चिम दिग्दले भृंघीशाय नमः ।
वायव्य दिग्दले महासेनाय नमः ।

---

४२.५ पंचमावरण पूजा

इंद्राय नमः ।अग्नये नमः ।
यमाय नमः ।नैरृतये नमः ।
वरुणाय नमः ।वायव्ये नमः ।
कुबेराय नमः ।ईशानाय नमः ।
ब्राह्मणे नमः ।अनंताय नमः ।

---

४२.६ षष्ठावरण पूजा

वज्राय नमः ।शक्तये नमः ।
दण्डाय नमः ।खड्गाय नमः ।
पाशाय नमः ।अंकुशाय नमः ।
गधायै नमः ।त्रिशूलाय नमः ।
पद्माय नमः ।चक्राय नमः ।

सर्वेभ्यो आवरण देवताभ्यो नमः ।
सर्वोपचारार्थे गन्धाक्षत पुष्पाणि समर्पयामि॥

---

४३ अष्टोत्तरशतनाम पूजा

॥ॐ ॥

शिवाय नमः ।महेश्वराय नमः ।
शंभवे नमः ।पिनाकिने नमः ।
शशिशेखराय नमः ।वामदेवाय नमः ।
विरूपाक्षाय नमः ।कपर्दिने नमः ।
नीललोहिताय नमः ।शंकराय नमः ।
शूलपाणये नमः ।खट्वांगिने नमः ।
विष्णुवल्लभाय नमः ।शिपिविष्टाय नमः ।
अंबिकानाथाय नमः ।श्रीकण्ठाय नमः ।
भक्तवत्सलाय नमः ।भवाय नमः ।
शर्वाय नमः ।त्रिलोकेशाय नमः ।
शितिकण्ठाय नमः ।शिवा प्रियाय नमः ।
उग्राय नमः ।कपालिने नमः ।
कामारये नमः ।अन्धकासुरसूदनाय नमः ।
गंगाधराय नमः ।ललाटाक्षाय नमः ।
कालकालाय नमः ।कृपानिधये नमः ।
भीमाय नमः ।परशुहस्ताय नमः ।
मृगपाणये नमः ।जटाधराय नमः ।
कैलासवासिने नमः ।कवचिने नमः ।
कठोराय नमः ।त्रिपुरान्तकाय नमः ।
वृषांकाय नमः ।वृषभारूढाय नमः ।
भस्मोद्धूलित विग्रहाय नमः ।सामप्रियाय नमः ।
स्वरमयाय नमः ।त्रयीमूर्तये नमः ।
अनीश्वराय नमः ।सर्वज्ञाय नमः ।
परमात्मने नमः ।सोमसूर्याग्निलोचनाय नमः ।
हविषे नमः ।यज्ञमयाय नमः ।
सोमाय नमः ।पंचवक्त्राय नमः ।
सदाशिवाय नमः ।विश्वेश्वराय नमः ।
वीरभद्राय नमः ।गणनाथाय नमः ।
प्रजापतये नमः ।हिरण्यरेतसे नमः ।
दुर्धर्षाय नमः ।गिरीशाय नमः ।
गिरिशाय नमः ।अनघाय नमः ।
भुजंगभूषणाय नमः ।भर्गाय नमः ।
गिरिधन्वने नमः ।गिरिप्रियाय नमः ।
कृत्तिवाससे नमः ।पुरारातये नमः ।
भगवते नमः ।प्रमथाधिपाय नमः ।
मृत्युंजयाय नमः ।सूक्ष्मतनवे नमः ।
जगद्व्यापिने नमः ।जगद्गुरुवे नमः ।
व्योमकेशाय नमः ।महासेनजनकाय नमः ।
चारुविक्रमाय नमः ।रुद्राय नमः ।
भूतपतये नमः ।स्थाणवे नमः ।
अहयेबुध्न्याय नमः ।दिगंबराय नमः ।
अष्टमूर्तये नमः ।अनेकात्मने नमः ।
सात्विकाय नमः ।शुद्धविग्रहाय नमः ।
शाश्वताय नमः ।खण्डपरशवे नमः ।
अज्ञाय नमः ।पाशविमोचकाय नमः ।
मृडाय नमः ।पशुपतये नमः ।
देवाय नमः ।महादेवाय नमः ।
अव्ययाय नमः ।हरये नमः ।
भगनेत्रभिदे नमः ।अव्यक्ताय नमः ।
दक्षाध्वरहराय नमः ।हराय नमः ।
पूषदन्तभिदे नमः ।अव्यग्राय नमः ।
सहस्राक्षाय नमः ।सहस्रपदे नमः ।
अपवर्गप्रदाय नमः ।अनन्ताय नमः ।
तारकाय नमः ।परमेश्वराय नमः ।

इति अष्टोत्तर पूजां समर्पयामि ॥

---

## ४४ धूपं

वनस्पत्युद्भवो दिव्यो गन्धाढ्यो गन्धवुत्तमः ।
आघ्रेयः महिपालो धूपोयं प्रतिगृह्यताम् ॥

यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् ।
मुखं किमस्य कौ बाहू कावूरू पादावुच्येते ॥

ॐ बलाय नमः ।ॐ शिवाय नमः ।धूपं आघ्रापयामि ॥

---

## ४५ दीपं

दीपं हि परमं शम्भो घृत प्रज्वलितं मया ।
दत्तं गृहाण देवेश मम ज्ञानप्रद भव ॥

भक्त्या दीपं प्रयश्चामि देवाय परमात्मने ।
त्राहि मां नरकात् घोरात् दीपं ज्योतिर् नमोस्तुते ॥

ब्राह्मणोस्य मुखमासीत् बाहू राजन्यः कृतः ।
उरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥

ॐ श्री बलप्रमथनाय नमः ।ॐ नमः शिवाय ।दीपं दर्शयामि ॥

---

## ४६ नैवेद्यं

(dip finger in water and write a square and 'shrii' mark inside the square. Place naivedya on 'shrii'. ; remove lid and sprinkle water around the vessel; place in each food item one washed leaf/flower/axatha)

ॐ सदाशिवाय विद्महे महादेवाय धीमहि ।
तन्नो शंकर प्रचोदयात् ॥

ॐ नमः शिवाय ॥

(show mudras)

निर्वीषिकरणार्थे तार्क्ष मुद्रा ।
अमृती करणार्थे धेनु मुद्रा ।
पवित्रीकरणार्थे शङ्ख मुद्रा ।
संरक्षणार्थं चक्र मुद्रा ।
विपुलमाया करणार्थे मेरु मुद्रा ।

Touch naivedya and chant 9 times 'ॐ'

ॐ सत्यंतवर्तेन परिसिञ्चामि
(sprinkle water around the naivedya)

भोः! स्वामिन् भोजनार्थं आगच्छादि विज्ञाप्य
(request Lord to come for dinner)

सौवर्णे स्थालिवैर्ये मणिगणकचिते गोघृतां
सुपक्वां भक्ष्यां भोज्यां च लेह्यानपि
सकलमहं जोष्यम्न नीधाय नाना शाकै रूपेतं
समधु दधि घृतं क्षीर पाणीय युक्तं
तांबूलं चापि शिवं प्रतिदिवसमहं मनसे चिन्तयामि ॥

अद्य तिष्ठति यत्किन्चित् कल्पितश्चापरंगृहे
पक्वान्नं च पानीयं यथोपस्कर संयुतं
यथाकालं मनुष्यार्थे मोक्ष्यमानं शरीरिभिः
तत्सर्वं शिवपूजास्तु प्रयतां मे महेश्वर
सुधारसं सुविफुलं आपोषणमिदं
तव गृहाण कलशानीतं यथेष्टमुप भुज्ज्यताम् ॥

ॐ नमः शिवाय ।अमृतोपस्तरणमसि स्वाहा ॥
(drop water from sha.nkha)

ॐ प्राणात्मने स्वाहा ।
ॐ अपानात्मने स्वाहा ।
ॐ व्यानात्मने स्वाहा ।
ॐ उदानात्मने स्वाहा ।
ॐ समानात्मने स्वाहा ।

ॐ नमः शिवाय ।

नैवेद्यं गृह्यतां देव भक्ति मे अचलां कुरुः ।
ईप्सितं मे वरं देहि इहत्र च परां गतिम् ॥

श्री सदाशिवं नमस्तुभ्यं महा नैवेद्यं उत्तमम् ।
संगृहाण सुरश्रेष्ठ भक्ति मुक्ति प्रदायकम् ॥

नैवेद्यं समर्पयामि ॥

(cover face with cloth and chant गायत्री मंत्र five times or repeat 12 times ॐ नमः शिवाय )

सर्वत्र अमृतोपिधान्यमसि स्वाहा ।
ॐ नमः शिवाय ।उत्तरापोषणं समर्पयामि ॥

(Let flow water from sha.nkha)

---

४७ महा फलं
(put tulsi / axathaa on a big fruit)

इदं फलं मयादेव स्थापितं पुरतस्तव ।
तेन मे सफलावाप्तिर् भवेत् जन्मनि जन्मनि ॥

ॐ शिवाय नमः ।महाफलं समर्पयामि ।

---

४८ फलाष्टक
(put tulsi/axata on fruits)

कूष्माण्ड मातुलिङ्गं च नारिकेलफलानि च ।
गृहाण पार्वतीकान्त सोमेश प्रतिगृह्यताम् ॥

ॐ केदारेश्वराय नमः ।फलाष्टकं समर्पयामि ॥

---

४९ करोद्वर्तनम्

करोद्वर्तन्कं देवमया दत्तं हि भक्तितः ।
चारु चंद्र प्रभां दिव्यां गृहाण जगदीश्वर ॥

ॐ श्री शंकराय नमः ।
करोद्वर्तनार्थे चंदनं समर्पयामि ॥

---

५० तांबूलं

पूगिफलं सतांबूलं नागवल्लि दलैर्युतम् ।
ताम्बूलं गृह्यतां देव येल लवङ्ग संयुक्तम् ॥

ॐ मनोन्मयाय नमः ।पूगिफल ताम्बूलं समर्पयामि ॥

---

५१ दक्षिणा

हिरण्य गर्भ गर्भस्थ हेमबीज विभावसोः ।
अनंत पुण्य फलदा अथः शांतिं प्रयच्छ मे ॥

ॐ श्री शिवाय नमः । सुवर्ण पुष्प दक्षिणां समर्पयामि ॥

५२ महा नीराजन

चक्षुर्दां सर्वलोकानां तिमिरस्य निवारणम् ।
अर्थिक्यं कल्पितं भक्त्या गृहाण परमेश्वर ॥

श्रीयै जातः श्रिय अनिरियाय श्रियं वयो जरित्रभ्यो ददाति
श्रियं वसाना अमृतत्त्व मायन् भवंति सत्या समिधा मितद्रौ
श्रिय येवैनं तत् श्रिया मादधाति संतत मृचा वषट्कृत्यं
संततं संधीयते प्रजया पशुभिः ययेवं वेद ॥

ॐ नमः शिवाय । महानीराजनं दीपं समर्पयामि ॥

५३ कर्पूर दीप

अर्चत प्रार्चत प्रिय मे दासो अर्चत ।
अर्चन्तु पुत्र का वतपुरन्न धृष्ण वर्चत ॥

कर्पूरकं महाराज रंभोद्भूतं च दीपकम् ।
मङ्गलार्थं महीपाल सङ्गृहाण जगत्पते ॥

ॐ नमः शिवाय। कर्पूर दीपं समर्पयामि ॥

५४ प्रदक्षिणा

नाभ्या आसीदन्तरिक्षम् शीर्ष्णो द्यौः समवर्तत ।
पद्भ्यां भूमिर्दिशः श्रोत्रात् तथा लोकांग अकल्पयन् ॥

यानि कानि च पापानि जन्मांतर कृतानि च ।
तानि तानि विनश्यन्ति प्रदक्षिणे पदे पदे ॥

प्रदक्षिण त्रियं देव प्रयत्नेन मया कृतं ।
तेन पापाणि सर्वाणि विनाशाय नमोऽस्तुते ॥

ॐ नमः शिवाय । प्रदक्षिणान् समर्पयामि ॥

५५ नमस्कार

सप्तास्यासन् परिधयः त्रिस्सप्त समिधः कृताः ।
देवा यद्यज्ञं तन्वानाः अबध्नन्पुरुषं पशुम् ॥

नमस्ते सर्वलोकेश नमस्ते जगदीश्वर ।
नमस्तेस्तु पर ब्रह्म नमस्ते परमेश्वर ॥
हेतवे जगतावेव संसारार्णव सेतवे ।
प्रभवे सर्वविद्यानां शम्भवे गुरुवे नमः ॥

नमो नमो शम्भो नमो नमो जगत्पते ।
नमो नमो जगत्साक्षिण् नमो नमो निरन्जन ॥
नमोस्तुते शूलपाणे नमोस्तु वृषभध्वज ।
जीमूतवाहन करे सर्व त्र्यंबक शंकर ॥

महेश्वर हरेशान सुवनाक्ष वृषाकपे ।
दक्ष यज्ञ क्षयकर काल रुद्र नमोऽस्तुते ॥

त्वमादिरस्यजगत् त्वं मध्यं परमेश्वर ।
भवानंतश्च भगवन् सर्वगस्त्वयं नमोस्तुते ॥

पूर्वे शर्वाय कीर्तिमूर्तये नमः ।
ईशान्यां भवाय जलमूर्तये नमः ।
उत्तरे रुद्राय अग्निमूर्तये नमः ।
वायुव्यां उग्राय वायुमूर्तये नमः ।
पश्चिमे भीमाय आकाशमूर्तये नमः ।
नैऋत्यां पशुपतये यजमान मर्दये नमः।
दक्षिणे महादेवाय सोममूर्तये नमः ।
आग्नेयां ईशानाय सूर्यमूर्तये नमः ॥

ॐ नमः शिवाय । नमस्कारान् समर्पयामि ॥

५६ राजोपचार

गृहाण परमेशान सरत्ने छत्र चामरे ।
दर्पणं व्यञ्जनं चैव राजभोगाय यत्नथः ॥

ॐ चन्द्रशेखराय नमः । छत्रं समर्पयामि ।
ॐ व्योमकेशाय नमः । चामरं समर्पयामि ।
ॐ विश्वात्मने नमः । गीतं समर्पयामि ।
ॐ सोममूर्तये नमः । नृत्यं समर्पयामि ।
ॐ विश्वमूर्तये नमः । वाद्यं समर्पयामि ।
ॐ गंभीरनादाय नमः । दर्पणं समर्पयामि ।
ॐ मृगपाणये नमः । व्यञ्जनं समर्पयामि ।
ॐ भुजंगनाथाय नमः । आन्दोलनं समर्पयामि ।
ॐ त्रिकालाग्निनेत्राय नमः । राजोपचारान् समर्पयामि ।
ॐ सर्वव्यापिने नमः । सर्वोपचारान् समर्पयामि ।

५७ मंत्र पुष्प

यज्ञेन यज्ञमयजन्त देवाः तानि धर्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानः सचन्ते यत्र पूर्वे साध्याः सन्ति देवाः ॥

यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम् ।
सूक्तं पञ्चदशर्चं च श्रीकामः सततं जपेत् ॥

विद्या बुद्धि धनैश्वर्य पुत्र पौत्रादि संपदः ।
पुष्पांजलि प्रदानेन देहिमे ईप्सितं वरम् ॥

नमोऽस्त्वनंताय सहस्र मूर्तये सहस्र पादाक्षि शिरोरु बाहवे ।
सहस्रनाम्ने पुरुषाय शाश्वते सहस्र कोटी युगधारिणे नमः ॥

ॐ नमो महद्भयो नमो अर्भकेभ्यो नमो युवभ्यो नमो आसीनेभ्यः ।
यजां देवान्य दिशक्रवा ममा जायसः शं समावृक्षिदेव ॥
ॐ ममत्तुनः परिज्ञावसरः ममत्तु वातो अपां व्रशन्वान् ।
शिशीतमिन्द्रा पर्वता युवन्नस्थन्नो विश्वेवरिवस्यन्तु देवाः ॥
ॐ कथात अग्ने शुचीयंत अयोर्ददाशुर्वाजे भिराशुशानः ।
उभेयत्तोकेतनये दधाना ऋतस्य सामनृणयंत देवाः ॥

ॐ राजाधि राजाय प्रसह्य साहिने नमो वयं वैश्रवणाय
कूर्महे समे कामान् काम कामाय मह्यं कामेश्वरो
वैश्रवणो दधातु कुबेराय वैश्रवणाय महाराजाय नमः ॥

ॐ स्वस्ति साम्राज्यं भोज्यं स्वाराज्यं वैराज्यं
पारमेष्ठां राज्यं महाराज्यमाधिपत्यमयं समंत
पर्यायिस्यात् सार्व भ्ॐअः सार्वायुशः अंतादा
परार्धात् पृथिव्यै समुद्र पर्यन्ताय एकरालिति तदप्येश
श्लोकोभिगीतो मरूतः परिवेष्टारो मरुतस्या वसन्गृहे
आवीक्षितस्य कामप्रेर्विश्वेदेवा सभासद इति ॥

श्री साम्बसदाशिवाय नमः । मंत्रपुष्पं समर्पयामि ॥

---

५८ क्षमापनं

यत्किंचित् कुर्महे देव सद सुकृत्दुष्कृतम् ।
तन्मे शिवपादस्य भुंक्षवक्षपय शंकर ॥

करचरणकृतं वा कायजं कर्मजं वा ।
श्रवण नयनजं वा मानसं वापराधम् ॥
विहितमवहितं वा सर्वमेतत् क्षमस्व ।
जय जय करुणाब्धे श्री महादेव शम्भो ॥

---

५९ प्रार्थना

नमोव्यक्ताय सूक्ष्माय नमस्ते त्रिपुरान्तक ।
पूजां गृहाण देवेश यथाशक्त्युपपादिताम् ॥
किं न जानासि देवेश त्वयी भक्तिं प्रयश्च मे ।
स्वपादाग्रतले देव दास्यं देहि जगत्पते ॥

बद्धोहं विविद्धै पाशै संसारुभयबंधनै ।
पतितं मोहजाले मं त्वं समुध्धर शंकर ॥

प्रसन्नो भव मे श्रीमन् सद्गतिः प्रतिपाद्यताम् ।
त्वदालोकन मात्रेण पवित्रोस्मि न संशयः ॥

त्वदन्य शरण्यः प्रपन्नस्य नेति ।
प्रसीद स्मरन्नेव हन्न्यास्तु दैन्यम् ॥
नचेत्ते भवेद्भक्ति वात्सल्य हानि ।
स्ततो मे दयालो दयां सन्निदेहि ॥

सकारणमशेषस्य जगतः सर्वदा शिवः ।
गो ब्राह्मण नृपाणां च शिवं भवतु मे सदा ॥

---

६० शङ्ख ब्रामण

(make three rounds of sha.nkha with
water like aarati and pour down;
chant OM 9 times and show mudras)

इमां आपशिवतम इमं सर्वस्य भेषजे ।
इमां राष्ट्रस्य वर्धिनि इमां राष्ट्र भ्रतोमत ॥

---

६१ तीर्थ प्राश्न

लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः ।
येषां इन्दीवर श्यामो हृदयस्तो जनार्दनः ॥

अकाल मृत्यु हरणं सर्व व्याधि निवारणं ।
सर्व पाप उपशमनं शिव पादोदकं शुभम् ॥

---

६२ विसर्जन पूजा

आराधितानां देवतानां पुनः पूजां करिष्ये ॥
ॐ नमः शिवाय ॥

पूजांते छत्रं समर्पयामि । चामरं समर्पयामि ।
नृत्यं समर्पयामि । गीतं समर्पयामि ।
वाद्यं समर्पयामि । आंदोलिक आरोहणं समर्पयामि ।
अश्वारोहणम् समर्पयामि । गजारोहणं समर्पयामि ।

श्री साम्बसदाशिवाय नमः ।

समस्त राजोपचार देवोपचार शक्त्युपचार भक्त्युपचार
पूजां समर्पयामि ॥

---

६३ आत्म समर्पण

नित्यं नैमित्तिकं काम्यं यत्कृतं तु मया शिव ।

तत् सर्वं परमेशान मया तुभ्यं समर्पितम् ॥

मंत्रहीनं क्रियाहीनं भक्तिहीनं जनार्दन ।
यत्पूजितं मयादेव परिपूर्णं तदस्तु मे ॥

आवाहनं न जानामि, न जानामि विसर्जनम् ।
पूजाविधिं न जानामि क्षमस्व पुरुषोत्तम ॥

अपराध सहस्राणि क्रियन्ते अहर्निशं मया ।
तानि सर्वाणि मे देव क्षमस्व पुरुषोत्तम ॥

वर्तमाने बहुदान्य नाम संवत्सरे माग मासे कृशण पक्षे
त्रयोदसि तिथौ श्री साम्बसदाशिव प्रेरणया श्री
साम्बसदाशिव प्रीत्यर्थं अनेन मया चरित शिवरात्रि
व्रते श्री सदाशिव पूजाराधनेन
भगवान् श्री शंकरः प्रीयतां ॥

ॐ तत्सत्

॥ श्री सदाशिवार्पणमस्तु ॥

---

६४ अर्घ्यप्रदानं

श्री साम्बसदाशिव प्रेरणया श्री साम्बसदाशिव प्रीत्यर्थं
शिवरात्रि व्रत सम्पूर्ण फल प्राप्यर्थं च अर्घ्य प्रदानं करिष्ये।

व्योमकेश नमस्तुभ्यं व्योमात्मा व्योमरूपिणे ।
नक्षत्ररुपिणे तुभ्यं ददाम्यर्घ्यं नमोऽस्तुते ।
श्री शिवाय नमः ।
तारकलिंगाय इदमर्घ्यं दत्तं न मम ॥

कैलाश निलय शम्भो पार्वती प्रिय वल्लभ ।
त्रैलोक्यतमविध्वंसिन् गृहाणर्घ्यं सदाशिव ॥
श्री शिवाय नमः ।
सदाशिवाय इदमर्घ्यं दत्तं न मम ॥

कालरुद्र शिव शम्भो कालात्मन् त्रिपुरांतक ।
दुरितग्न सुरश्रेष्ठ गृहाणर्घ्यं सदाशिव ॥
श्री शिवाय नमः ।
सदाशिवाय इदमर्घ्यं दत्तं न मम ॥

आकाशाद्याशरीराणि गृहनक्षत्रमालैनि ।
सर्व सिद्धि निवासार्तं ददामर्घ्यं सदाशिव ॥
श्री शिवाय नमः ।
सदाशिवाय इदमर्घ्यं दत्तं न मम ॥

उमादेवी शिवार्धाङ्गी जगन्मातृ गुणात्मिके ।
त्राहि मां देवि सर्वेषि गृहाणार्घ्यं नमोऽस्तुते ॥
श्री पार्वत्यै नमः ।
पार्वत्यै इदमर्घ्यं दत्तं न मम ॥

श्री गुणात्मन् त्रिलोकेशः ब्रह्मा विष्णु शिवात्मक ।
अर्घ्यं चेदं मया दत्तं गृहाण गणनायक। ॥
श्री गणपतये नमः ।
गणपतये इदमर्घ्यं दत्तं न मम ॥

सेनाधिप सुरश्रेष्ठ पार्वती प्रियनन्दन ।
गृहाणर्घ्यं मया दत्तं नमस्ते शिखिवाहन ।
श्री स्कन्दाय नमः ।
स्कन्दाय इदमर्घ्यं दत्तं न मम ॥

वीरभद्र महावीर विश्व ज्ञान वर प्रद ।
इदमर्घ्यं प्रदास्यामि संग्रहाण शिवप्रिय ॥
श्री वीरभद्राय नमः ।
वीरभद्राय इदमर्घ्यं दत्तं न मम ॥

धर्मस्त्वं वृष रूपेण जगदानन्दकारक ।
अष्टमूर्तैरधिष्ठानं अथः पाहि सनातन ।
श्री वृषभाय नमः ।
वृषभाय इदमर्घ्यं दत्तं न मम ॥

चण्डीश्वर महादेव त्राहि माम् कृपयाकार ।
इदमर्घ्यं प्रदास्यामि प्रसन्ना वरदा भव ।
श्री चण्डीश्वराय नमः ।
चण्डीश्वराय इदमर्घ्यं दत्तं न मम ॥

अनेन शिवरात्रि व्रतांगत्वेन अर्घ्यप्रदानेन भगवन्
श्री सदाशिव प्रीयतां ।
ॐ तत्सत्
श्री सदाशिवार्पणमस्तु ॥

यान्तु देव गणाः सर्वे पूजां आदाय पर्तिवीम्
इष्ट काम्यार्थ सिध्यर्थं पुनरागमनाय च ॥

(Shake the kalasha)

Text by Sri S. A. Bhandarkar (achkumg3@batelco.com.bh); Modified for ITRANS;

Transliterated by Sowmya Ramkumar (ramkumar@batelco.com
Last updated on February 13, 1999

